इत्युक्त्वा जननीमेव स बालो प्रस्थितस्ततः । तयोक्तमदभिज्ञानः प्रापदुज्जयिनीमिमाम् ॥ २०९
दीव्यन्तमक्षैर्मां तत्र दृष्ट्वाभिज्ञाननिश्चितम् । ठिण्ठास्थानेत्य सर्वांश्च द्यूतेन जयति स्म सः ॥ २१०
बालत्वेऽपि महाधूर्तः सर्वस्य कृतविस्मयः । अर्थिभ्यः स ददाति स्म तद्द्यूतावर्जितं धनम् ॥ २११
रात्रौ स्वयुक्त्या चागत्य कार्पाससञ्चियोपरि । लघु विन्यस्य सुप्तं मां शय्याखट्वामपाहरत् ॥ २१२
ततः प्रबुद्धो दृष्ट्वाहमात्मानं तूलपृष्ठगम् । अखट्वं सहसाभूवं सलज्जाहासविस्मयः ॥ २१३
अथाहमापणं देव शनैर्गत्वा परिभ्रमन् । तमेव बालं तां खट्वां विक्रीणानं व्यलोकयम् ॥ २१४
उपगम्याब्रवं तं च कियता दीयते त्वया । एषा मूल्येन खट्वेति ततो बालोऽब्रवीत्स माम् ॥ २१५
न लभ्यतेऽसौ मूल्येन खट्वा धूर्तशिरोमणे । अपूर्वाद्भुतवृत्तान्तवर्णनेन तु लभ्यते ॥ २१६
तच्छ्रुत्वाहमवोचं तं तर्हि वच्म्यद्भुतं तव । तत्त्वतः सत्यमिति तद्बुद्ध्वा चेदनुमन्यसे ॥ २१७
यदि त्वसत्यमिति तद्वक्ष्यस्यप्रत्ययेन मे । ततस्त्वं जारजातः स्याः खट्वां च प्राप्नुयामहम् ॥ २१८
अनेन समयेनाङ्ग विचित्रं शृणु वच्मि ते । पूर्वं दुर्भिक्षदोषोऽभूद्राष्ट्रे कस्यापि भूपतेः ॥ २१९
स वाहनानां नागानां शीकराम्बुमहाभरैः । सूकरप्रेयसीपृष्ठे स्वयं चक्रे कृषिं नृपः ॥ २२०
ततो धान्यैः समुत्पन्नैः समृद्धः स महीपतिः । दुर्भिक्षं शमयामास प्रजानां जनपूजितः ॥ २२१
एवं मयोक्ते विहसन्सोऽवादीद्बालकस्तदा । नागानां वाहना मेघाः सूकरप्रेयसी क्षितिः ॥ २२२
विष्णोः सूकररूपस्य सा हि प्रियतमोच्यते । तस्यां मेघाम्बुभिर्धान्यमुत्पन्नं चेत्किमद्भुतम् ॥ २२३
इत्युक्त्वा बालधूर्तो मां विस्मितं सोऽब्रवीत्पुनः । इदानीमहमाख्यामि तवापूर्वं किमप्यदः ॥ २२४
प्रत्येषि यदि विज्ञाय तत्सत्यमिति तत्त्वतः । तत्ते खट्वां ददाम्येतां स्यास्त्वं दासो ममान्यथा ॥ २२५
तथेत्युक्ते मया सोऽथ बालधूर्तोऽब्रवीदिदम् । उदपादि पुरा धूर्तपते कोऽपीह बालकः ॥ २२६
अकम्पयत्पदभरेणोर्वीमुत्पन्न एव यः । तदैव वृद्धो भूत्वा च चक्रे लोकान्तरे पदम् ॥ २२७
इत्युक्तवन्तं बालं तं तदबुद्ध्वाहमब्रवम् । अलीकमेतन्नास्त्यत्र सत्यता काप्यहो इति ॥ २२८
ततः स बालोऽवादीन्मां जातस्यैव न किं हरेः । चकम्पे चरणाक्रान्ता वसुधा वामनाकृतेः ॥ २२९
तदैव वृद्धिं गत्वा च चक्रे तेन न किं पदम् । द्युलोके तज्जितोऽस्येव मया दासीकृतोऽसि च ॥ २३०
अत्रापणगताश्चैते सर्वे नौ साक्षिणः पणे । तदहं यत्र गच्छामि तत्रागच्छ समं मया ॥ २३१
इत्युक्त्वा सोऽग्रहीद्बालो धीरो मां पाणिना भुजे । तत्रस्थाश्च तथैवास्य साक्ष्यं सर्वे व्यधुर्जनाः ॥ २३२
ततश्च मामवष्टभ्य पणबद्धं स सानुगः । नयति स्मान्तिकं मातुः पुरं पाटलिपुत्रकम् ॥ २३३
तन्माता च तदानीं तं दृष्ट्वा सा मामभाषत । आर्यपुत्र मयाप्येषा स्वप्रतिज्ञाद्य पूरिता ॥ २३४
आनायितोऽस्यवष्टभ्य त्वज्जातेनैव सूनुना । इत्युक्त्वावर्णयत्साध्वी वृत्तान्तं सर्वसंनिधौ ॥ २३५
ततस्तां बान्धवाः सर्वे स्वप्रज्ञासाधितेप्सिताम् । पुत्रापमृष्टकौलीनामभ्यनन्दन्कृतोत्सवाः ॥ २३६
कृतार्थश्च तया पत्न्या साकं तेन सुतेन च । उषित्वा चिरमत्राहमागामुज्जयिनीमिमाम् ॥ २३७
एवं सन्त्येव देवेह भर्तृभक्ताः कुलाङ्गनाः । न पुनः सर्वथा सर्वा दुर्वृत्ता एव योषितः ॥ २३८
इत्येतां मूलदेवस्य निशम्य वदनात्कथाम् । विक्रमादित्यनृपतिस्तुतोष सह मन्त्रिभिः ॥ २३९
इत्याश्चर्याणि शृण्वन्स पश्यन्कुर्वंश्च भूपतिः । विजित्य विक्रमादित्यः सद्वीपां बुभुजे महीम् ॥ २४०

इति संयोगवियोगैर्निचितामाख्याय विषमशीलकथाम् ।
कण्वमुनिः पुनरवदत्तस्मिन्मां मदनमञ्चुकाविरहे ॥ २४१
एवं भवन्त्यचिन्त्या विरहाश्च समागमाश्च जन्तूनाम् ।
तस्मात्तवापि न चिरान्नरवाहनदत्त संगमः प्रियया ॥ २४२
अवलम्बस्व धृतिं तत्सुचिरं भोक्तासि वत्सराजसुत ।
भार्यासचिवसमेतो विद्याधरचारुचक्रवर्तिपदम् ॥ २४३